एवं दोर्दण्डदर्पं दिशि दिशि परमाश्चर्य्यदं गापयित्वा
कृत्वा दुर्वृत्तशान्त्या त्रिभुवनमखिलं स्वस्वधर्म्मप्रवृत्तम् ।
भुक्त्वा राज्यं सहस्राधिकमयुतमहो वत्सरान् पूर्णकामः
सार्द्धं पौरैः समस्तैरगमदतिकृती राघवः स्वीयलोकम् ॥ १४८ ॥

एष श्रीलहनूमता विरचिते श्रीमन्महानाटके
वीरश्रीयुतरामचन्द्रचरिते प्रत्युद्धृते विक्रमैः ।
मिश्रश्रीमधुसूदनेन कविना सन्दर्भ्य सज्जीकृते
स्वर्गारोहणनामकोऽत्र नवमो यातोऽङ्क एवेत्यसौ ॥ १४९

समाप्तोऽयं ग्रन्थः ।

---

आनीतानि व्योमयानानि विमानानि अनवरतम् अजस्रम् उपेयुः उपजग्मुः, अहो आश्चर्य्यम् । स्रग्धरा वृत्तम् ॥ १४७ ॥

एवमिति । अतिकृती अतिकुशलः राघवः दिशि दिशि एवम् इत्थं परमाश्चर्य्यदं दोर्दण्डदर्पं भुजबलगौरवं गापयित्वा कीर्त्तयित्वा विख्याप्येत्यर्थः, दुर्वृत्तानां दुराचाराणां दशानना-दीनां शान्त्या संहारेण अखिलं समग्रं त्रिभुवनं स्वस्वधर्म्मे प्रवृत्तं रतं कृत्वा सहस्राधिकमयुतं वत्सरान् एकादशसहस्रवर्षाणि इत्यर्थः, राज्यं भुक्त्वा पूर्णकामः सिद्धमनोरथः समस्तैः पौरैः पुरवासिभिः सार्द्धं स्वीयलोकं विष्णुलोकं, वैकुण्ठमित्यर्थः, अग-मत् जगाम । स्रग्धरा वृत्तम् ॥ १४८ ॥

एष इति । स्वर्गारोहणं नाम यस्य सः ॥ १४९ ॥

इति बि, ए, उपाधिधारिणा पण्डितकुलपतिना
श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण विरचिता महानाटक-
व्याख्या समाप्ता ।